# श्रीएकमुखी हनुमत्कवचम्

अथ श्री एकमुखी हनुमत्कवचं प्रारभ्यते ।

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।

वातात्मजं वानरयूथमुख्यं  *श्रीरामदूतं शरणं प्रपद्ये ॥

*श्रीरामदूतं शिरसा नमामि ॥

श्रीहनुमते नमः

एकदा सुखमासीनं शङ्करं लोकशङ्करम् ।

पप्रच्छ गिरिजाकान्तं कर्पूरधवलं शिवम् ॥

पार्वत्युवाच

भगवन्देवदेवेश लोकनाथ जगद्गुरो ।

शोकाकुलानां लोकानां केन रक्षा भवेद्ध्रुवम् ॥

सङ्ग्रामे सङ्कटे घोरे भूतप्रेतादिके भये ।

दुःखदावाग्निसन्तप्तचेतसां दुःखभागिनाम् ॥

ईश्वर उवाच

शृणु देवि प्रवक्ष्यामि लोकानां हितकाम्यया ।

विभीषणाय रामेण प्रेम्णा दत्तं च यत्पुरा ॥

कवचं कपिनाथस्य वायुपुत्रस्य धीमतः ।

गुह्यं ते सम्प्रवक्ष्यामि विशेषाच्छृणु सुन्दरि ॥

ॐ अस्य श्रीहनुमत् कवचस्त्रोत्रमन्त्रस्य श्रीरामचन्द्र ऋषिः ।

अनुष्टुप्छन्दः । श्रीमहावीरो हनुमान् देवता। मारुतात्मज इति बीजम् ॥

ॐ अञ्जनीसूनुरिति शक्तिः । ॐ ह्रैं ह्रां ह्रौं इति कवचम् ।

स्वाहा इति कीलकम् । लक्ष्मणप्राणदाता इति बीजम् ।

मम सकलकार्यसिद्ध्यर्थे जपे वीनियोगः ॥

अथ न्यासः

ॐ ह्रां अङ्गुष्ठाभ्यां नमः । ॐ ह्रीं तर्जनीभ्यां नमः ।

ॐ ह्रूं मध्यमाभ्यां नमः । ॐ ह्रैं अनामिकाभ्यां नमः ।

ॐ ह्रौं कनिष्ठिकाभ्यां नमः । ॐ ह्रः करतलकरपृष्ठाभ्यां नमः ।

ॐ अञ्जनीसूनवे हृदयाय नमः । ॐ रुद्रमूर्तये शिरसे स्वाहा ।

ॐ वायुसुतात्मने शिखायै वषट् । ॐ वज्रदेहाय कवचाय हुम् ।

ॐ रामदूताय नेत्रत्रयाय वौषट् । ॐ ब्रह्मास्त्रनिवारणाय अस्त्राय फट् ।

ॐ रामदूताय विद्महे कपिराजाय धीमही ।

तन्नो हनुमान् प्रचोदयात् ॐ हुं फट् स्वाहा ॥ इति दिग्बन्धः ॥

अथ ध्यानम् ॥

ॐ ध्यायेद्बालदिवाकरधृतिनिभं देवारिदर्पापहं

देवेन्द्रप्रमुखप्रशस्तयशसं देदीप्यमानं रुचा ।

सुग्रीवादिसमस्तवानरयुतं सुव्यक्ततत्त्वप्रियं

संरक्तारुणलोचनं पवनजं पीताम्बरालङ्कृतम् ॥ १॥

उद्यन्मार्तण्डकोटिप्रकटरुचियुतं चारुवीरासनस्थं

मौञ्जीयज्ञोपवीतारुणरुचिरशिखाशोभितं कुण्डलाङ्गम् ।

भक्तानामिष्टदं तं प्रणतमुनिजनं वेदनादप्रमोदं

ध्यायेद्देवं विधेयं प्लवगकुलपतिं गोष्पदीभूतवार्धिम् ॥ २॥

वज्राङ्गं पिङ्गकेशाढ्यं स्वर्णकुण्डलमण्डितम् ।

नियुद्धकर्मकुशलं पारावारपराक्रमम् ॥ ३॥

वामहस्ते महावृक्षं दशास्यकरखण्डनम् ।
उद्यद्दक्षिणदोर्दण्डं हनुमन्तं विचिन्तयेत् ॥ ४॥

स्फटिकाभं स्वर्णकान्ति द्विभुजं च कृताञ्जलिम् ।
कुण्डलद्वयसंशोभिमुखाम्भोजं हरिं भजेत् ॥ ५॥

उद्यदादित्यसङ्काशमुदारभुजविक्रमम् ।
कन्दर्पकोटिलावण्यं सर्वविद्याविशारदम् ॥ ६॥

श्रीरामहृदयानन्दं भक्तकल्पमहीरूहम् ।
अभयं वरदं दोर्भ्यां कलये मारूतात्मजम् ॥ ७॥

अपराजित नमस्तेऽस्तु नमस्ते रामपूजित ।
प्रस्थानं च करिष्यामि सिद्धिर्भवतु मे सदा ॥ ८॥

यो वारांनिधिमल्पपल्वलमिवोल्लङ्घ्य प्रतापान्वितो
वैदेहीघनशोकतापहरणो वैकुण्ठतत्त्वप्रियः ।
अक्षाद्यर्चितराक्षसेश्वरमहादर्पापहारी रणे ।
सोऽयं वानरपुङ्गवोऽवतु सदा युष्मान्समीरात्मजः ॥ ९॥

वज्राङ्गं पिङ्गकेशं कनकमयलसत्कुण्डलाक्रान्तगण्डं
नाना विद्याधिनाथं करतलविधृतं पूर्णकुम्भं दृढं च
भक्ताभीष्टाधिकारं विदधति च सदा सर्वदा सुप्रसन्नं
त्रैलोक्यत्राणकारं सकलभुवनगं रामदूतं नमामि ॥ १०॥

उद्यल्लाङ्गूलकेशप्रलयजलधरं भीममूर्तिं कपीन्द्रं
वन्दे रामाङ्घ्रिपद्मभ्रमरपरिवृतं तत्त्वसारं प्रसन्नम् ।

वज्राङ्गं वज्ररूपं कनकमयलसत्कुण्डलाक्रान्तगण्डं

दम्भोलिस्तम्भसारप्रहरणविकटं भूतरक्षोऽधिनाथम् ॥ ११॥

वामे करे वैरिभयं वहन्तं शैलं च दक्षे निजकण्ठलग्नम् ।

दधानमासाद्य सुवर्णवर्णं भजेज्ज्वलत्कुण्डलरामदूतम् ॥ १२॥

पद्मरागमणिकुण्डलत्विषा पाटलीकृतकपोलमण्डलम् ।

दिव्यगेहकदलीवनान्तरे भावयामि पवमाननन्दनम् ॥ १३॥

ईश्वर उवाच

इति वदति विशेषाद्राघवो राक्षसेन्द्रम्

प्रमुदितवरचित्तो रावणस्यानुजो ह्

रघुवरवरदूतं पूजयामास भूयः

स्तुतिभिरकृतार्थः स्वं परं मन्यमानः ॥ १४॥

वन्दे विद्युद्वलयसुभगस्वर्णयज्ञोपवीतं

कर्णद्वन्द्वे कनकरुचिरे कुण्डले धारयन्तम् ।

उच्चैर्हृष्यद्द्युमणिकिरणश्रेणिसम्भाविताङ्गं

सत्कौपीनं कपिवरवृतं कामरूपं कपीन्द्रम् ॥ १५॥

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।

वातात्मजं वानरयूथमुख्यं श्रीरामदूतं सततं स्मरामि ॥ १६॥

ॐ नमो भगवते हृदयाय नमः ।

ॐ आञ्जनेयाय शिरसे स्वाहा ।

ॐ रुद्रमूर्तये शिखायै वषट् ।

ॐ रामदूताय कवचाय हुम् ।

ॐ हनुमते नेत्रत्रयाय वौषट् ।

ॐ अग्निगर्भाय अस्त्राय फट् ।

ॐ नमो भगवते अङ्गुष्ठाभ्यां नमः ।

ॐ आञ्जनेयाय तर्जनीभ्यां नमः ।

ॐ रुद्रमूर्तये मध्यमाभ्यां नमः ।

ॐ वायुसूनवे अनामिकाभ्यां नमः ।

ॐ हनुमते कनिष्ठिकाभ्यां नमः ।

ॐ अग्निगर्भाय करतलकरपृष्ठाभ्यां नमः ।

अथ मन्त्र उच्यते

ॐ ऐं ह्रीं श्रीं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः ।

ॐ ह्रीं ह्रौं ॐ नमो भगवते महाबलपराक्रमाय भूतप्रेतपिशाच

शाकिनी डाकिनी यक्षिणी पूतनामारी महामारी

भैरव-यक्ष-वेताल-राक्षस-ग्रहराक्षसादिकं

क्षणेन हन हन भञ्जय भञ्जय

मारय मारय शिक्षय शिक्षय महामाहेश्वर रुद्रावतार हुं फट् स्वाहा ।

ॐ नमो भगवते हनुमदाख्याय रुद्राय सर्वदुष्टजनमुखस्तम्भनं

कुरु कुरु ह्रां ह्रीं ह्रूं ठंठंठं फट् स्वाहा ।

ॐ नमो भगवते अञ्जनीगर्भसम्भूताय रामलक्ष्मणानन्दकराय

कपिसैन्यप्रकाशनाय पर्वतोत्पाटनाय सुग्रीवसाधकाय

रणोच्चाटनाय कुमारब्रह्मचारिणे गम्भीरशब्दोदयाय

ॐ ह्रां ह्रीं ह्रूं सर्वदुष्टनिवारणाय स्वाहा ।

ॐ नमो हनुमते सर्वग्रहानुभूतभविष्यद्वर्तमानान् दूरस्थान्

समीपस्थान् सर्वकालदुष्टदुर्बुद्धीनुच्चाटयोच्चाटय परबलानि

क्षोभय क्षोभय

मम सर्वकार्यं साधय साधय हनुमते

ॐ ह्रां ह्रीं ह्रूं फट् देहि ।

ॐ शिवं सिद्धं ह्रां ह्रीं ह्रूं ह्रौं स्वाहा ।

ॐ नमो हनुमते परकृतान् तन्त्रमन्त्र-पराहङ्कारभूतप्रेतपिशाच

परदृष्टिसर्वविघ्नदुर्जनचेटकविधान् सर्वग्रहान् निवारय निवारय
वध वध पच पच दल दल किल किल
सर्वकुयन्त्राणि दुष्टवाचं फट् स्वाहा ।
ॐ नमो हनुमते पाहि पाहि एहि एहि एहि
सर्वग्रहभूतानां शाकिनीडाकिनीनां विषं दुष्टानां सर्वविषयान्

आकर्षय आकर्षय मर्दय मर्दय भेदय भेदय

मृत्युमुत्पाटयोत्पाटय शोषय शोषय ज्वल ज्वल प्रज्ज्वल प्रज्ज्वल

भूतमण्डलं प्रेतमण्डलं पिशाचमण्डलं निरासय निरासय
भूतज्वर प्रेतज्वर चातुर्थिकज्वर विषमज्वर माहेश्वरज्वरान्
छिन्धि छिन्धि भिन्धि भिन्धि

अक्षिशूल-वक्षःशूल-शरोभ्यन्तरशूल-गुल्मशूल-पित्तशूल-
ब्रह्मराक्षसकुल-परकुल-नागकुल-विषं नाशय नाशय
निर्विषं कुरु कुरु फट् स्वाहा ।
ॐ ह्रीं सर्वदुष्टग्रहान् निवारय फट् स्वाहा ॥

ॐ नमो हनुमते पवनपुत्राय वैश्वानरमुखाय
हन हन पापदृष्टिं षण्ढदृष्टिं हन हन
हनुमदाज्ञया स्फुर स्फुर फट् स्वाहा ॥

श्रीराम उवाच
हनुमान् पूर्वतः पातु दक्षिणे पवनात्मजः ।
प्रतीच्यां पातु रक्षोघ्न उत्तरस्यामब्धिपारगः ॥ १॥

उदीच्यामूर्ध्वगः पातु केसरीप्रियनन्दनः ।
अधश्च विष्णुभक्तस्तु पातु मध्ये च पावनिः ॥ २॥

अवान्तरदिशः पातु सीताशोकविनाशनः ।
लङ्काविदाहकः पातु सर्वापद्भ्यो निरन्तरम् ॥ ३॥

सुग्रीवसचिवः पातु मस्तकं वायुनन्दनः ।
भालं पातु महावीरो भ्रुवोर्मध्ये निरन्तरम् ॥ ४॥

नेत्रे छायाऽपहारी च पातु नः प्लवगेश्वरः ।
कपोलकर्णमूले तु पातु श्रीरामकिङ्करः ॥ ५॥

नासाग्रे अञ्जनीसूनुर्वक्त्रं पातु हरीश्वरः ।
वाचं रुद्रप्रियः पातु जिह्वां पिङ्गललोचनः ॥ ६॥

पातु दन्तान् फाल्गुनेष्टश्चिबुकं दैत्यप्राणहृत् ।
var ओष्ठं रामप्रियः पातु चिबुकं दैत्यकोटिहृत्
पातु कण्ठं च दैत्यारिः स्कन्धौ पातु सुरार्चितः ॥ ७॥

भुजौ पातु महातेजाः करौ तु चरणायुधः ।
नखान्नखायुधः पातु कुक्षिं पातु कपीश्वरः ॥ ८॥

वक्षो मुद्रापहारी च पातु पार्श्वे भुजायुधः ।
लङ्काविभञ्जनः पातु पृष्ठदेशे निरन्तरम् ॥ ९॥

नाभिञ्च रामदूतस्तु कटिं पात्वनिलात्मजः ।
गुह्यं पातु महाप्राज्ञः सृक्किणी च शिवप्रियः ॥ १०॥

ऊरू च जानुनी पातु लङ्काप्रासादभञ्जनः ।

जङ्घे पातु महाबाहुर्गुल्फौ पातु महाबलः ॥ ११॥

अचलोद्धारकः पातु पादौ भास्करसन्निभः ।

पादान्ते सर्वसत्त्वाढ्यः पातु पादाङ्गुलीस्तथा ॥ १२॥

सर्वाङ्गानि महावीरः पातु रोमाणि चात्मवान् ।

हनुमत्कवचं यस्तु पठेद्विद्वान् विचाक्षणः ॥ १३॥

स एव पुरूषश्रेष्ठो भक्तिं मुक्तिं च विन्दति ।

त्रिकालमेककालं वा पठेन्मासत्रयं सदा ॥ १४॥

सर्वान् रिपून् क्षणे जित्वा स पुमान् श्रियमाप्नुयात् ।

मध्यरात्रे जले स्थित्वा सप्तवारं पठेद्यदि ॥ १५॥

क्षयाऽपस्मारकुष्ठादितापत्रयनिवारणम् ।

आर्किवारेऽश्वत्थमूले स्थित्वा पठतिः यः पुमान् ॥ १६॥

अचलां श्रियमाप्नोति सङ्ग्रामे विजयी भवेत् ॥ १७॥

यः करे धारयेन्नित्यं स पुमान् श्रियमाप्नुयात् ।

विवाहे दिव्यकाले च द्यूते राजकुले रणे ॥ १८॥

भूतप्रेतमहादुर्गे रणे सागरसम्प्लवे ।

दशवारं पठेद्रात्रौ मिताहारी जितेन्द्रियः ॥ १९॥

विजयं लभते लोके मानवेषु नराधिपः ।

सिंहव्याघ्रभये चाग्नौ शरशस्त्रास्त्रयातने ॥ २०॥

शृङ्खलाबन्धने चैव काराग्रहनियन्त्रणे ।

कायस्तम्भे वह्निदाहे गात्ररोगे च दारूणे ॥ २१॥

शोके महारणे चैव ब्रह्मग्रहविनाशने ।

सर्वदा तु पठेन्नित्यं जयमाप्नोत्यसंशयम् ॥ २२॥

भूर्जे वा वसने रक्ते क्षौमे वा तालपत्रके ।

त्रिगन्धेनाथवा मस्या लिखित्वा धारयेन्नरः ॥ २३॥

पञ्चसप्तत्रिलौहैर्वा गोपितं कवचं शुभम् ।

गले कट्यां बाहुमूले वा कण्ठे शिरसि धारितम् ॥ २४॥

सर्वान् कामानवाप्नोति सत्यं श्रीरामभाषितम् ॥ २५॥

उल्लङ्घ्य सिन्धोः सलिलं सलीलं यः शोकवह्निं जनकात्मजायाः ।

आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलिराञ्जनेयम् ॥ २६॥

ॐ हनुमानञ्जनीसूनुर्वायुपुत्रो महाबलः ।

श्रीरामेष्टः फाल्गुनसखः पिङ्गाक्षोऽमितविक्रमः ॥ २७॥

उदधिक्रमणश्चैव सीताशोकविनाशनः ।

लक्ष्मणप्राणदाता च दशग्रीवस्य दर्पहा ॥ २८॥

द्वादशैतानि नामानि कपीन्द्रस्य महात्मनः ।

स्वापकाले प्रबोधे च यात्राकाले च यः पठेत् ॥ २९॥

तस्य सर्वभयं नास्ति रणे च विजयी भवेत् ।

धनधान्यं भवेत्तस्य दुःखं नैव कदाचन ॥ ३०॥

